No. 16.

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. OXON.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# SPANDAPRADÎPIKÂ

OF

UTPALÂCHÂRYA

A COMMENTARY ON THE SPANDAKÂRIKÂ

EDITED BY

PANDIT VÂMAN S'ÂSTRÎ ISLÂMPURKAR
OF BOMBAY.

VOL. XIV.






PRINTED, PUBLISHED AND SOLD BY
E. J. LAZARUS & Co., BENARES.
MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:
JAYESTHARAM MUKUNDJI AND CO., BOMBAY:
OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:
LUZAC AND CO., LONDON.

1898.

No. 16.

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. Oxon.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# SPANDAPRADÎPIKÂ

OF

UTPALÂCHÂRYA

A COMMENTARY ON THE SPANDAKÂRIKÂ

EDITED BY

PANDIT VÂMAN ŚÂSTRÎ ISLÂMPURKAR
OF BOMBAY.

VOL. XIV.



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:
JAYESTHARAM MUKUNDJI AND CO., BOMBAY:
OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:
LUZAC AND CO., LONDON.

1898.

भट्टश्रीकल्लटसङ्कलितस्पन्दकारिकाव्याख्या ।

# स्पन्दप्रदीपिका ।



काश्मीरकश्रीमदुत्पलाचार्यविरचिता ।

सा च

मुंबईनिवासिना

पण्डित वामनशास्त्री इस्लामपुरकर

इत्यभिधेन संशोधिता ।



काश्याम्

मेडिकलहालमुद्रायन्त्रालये मुद्रिता प्रकाशिता च ।

शकाब्दाः १८२० ।

# PREFACE.

This the first edition of the Spandapradîpikâ, is based on two MSS., distinguished in the notes as *A*. and *B*. MS. *A*. belongs to me: MS. *B*. was purchased for the Bombay Government by Hofrath G. Bühler during his memorable tour through Kaśmîr in 1875. Both MSS. are written on Kaśmîri paper in devanâgarî character, and bear no date. Utpala, the author of the work, belongs probably to the first half of the tenth century (cf. Bühler's Tour &c. 1877, p. 79).

The Spanda system is closely related to that of the Tantras and to the Pratyabhijnâdarśana of Abhinavagupta (circ. 1,000 A. D.). Some account of it is given in the Sarvadarśanasaṁgraha under the heading S'aivadarśana (cf. Bühler pp. 78-79). A fuller discussion of the Spanda School and of the seven MSS. of works connected therewith (which I was fortunate enough to acquire while touring through Kaśmîr in 1884-85) I trust may be permitted me on some future occasion.

The present volume, small though it is, has been long delayed owing to the Plague in Western India where my lot is cast.

*14th April, 1898.* V. S. I.

## *Authors and Works mentioned in the* स्पन्दप्रदीपिका.



* ईश्वरप्रत्यभिज्ञा and प्रत्यभिज्ञा may possibly be the same.

† तत्त्वयुक्तिः and युक्तिः may possibly be the same.

* ईश्वरप्रत्यभिज्ञा and प्रत्यभिज्ञा may possibly be the same.
† तत्वयुक्तिः and युक्तिः may possibly be the same.

उत्पलाचार्यविरचिता ।

# स्पन्दप्रदीपिका ।

॥ ओं स्वस्ति ॥

॥ नमः श्रीगणेशाय ॥

ओम् ।

यत् परापरभूस्पर्शि यत्सङ्कल्पाल्लयोदयौ ।
स्पन्दसंज्ञं तद्रूपं तच्छक्तीशं स्वबलं नुमः ॥ १ ॥

नत्वा विकल्पविलसत्सत्स्वभावगुरुं गुरुम् ।
भुक्तिमुक्त्यै युक्तियुक्तं किञ्चिद्वर्ण्यार्थितो ऽर्थिभिः ॥ २ ॥

ज्ञानान्तराणि सन्त्याशु नात्यन्तसुखदानि तु ।
मुक्तात्मज्ञानममृतं सुरेष्विव मृत्युजित् ॥ ३ ॥

चिन्तामणिस्त्वेक एव सगुणेष्वमणिष्विव ।
तेजस्विषु यथैको ऽर्को निःशेषध्वान्तहा तथा ॥ ४ ॥

नारायणस्थानसंस्थद्विजवर्यत्रिविक्रमात् ।
जातो जनानुग्रहार्थं व्याख्याति स्पन्दमुत्पलः ॥ ५ ॥

मायाश्यामतमश्छन्न आत्मचिन्तामणिर्यतः ।
न दृश्यते ऽतस्तत्प्राप्त्यै ग्राह्या स्पन्दप्रदीपिका ॥ ६ ॥

अयमत्र किलाम्नायः सिद्धमुखेनागतं रहस्यं यत् ।
तद् भट्टकल्लटेन्दुर्वसुगुप्तगुरोरवाप्य, शिष्याणाम्– ॥ ७ ॥
अवबोधार्थमनुष्टुप्छ्लोकिकया ऽत्र सङ्ग्रहं कृतवान् ।
यदपि तदर्थो व्याख्याज्योत्स्ना प्रकटीकृतो ऽस्ति तेनैषत् – ॥ ८ ॥
मोहनिशामध्यगता मन्ददृशस्तदपि नार्थमीक्षन्ते ।
सूक्ष्मं दीपिकयाऽन्ते स्वतस्तदुद्दीपनार्थमहमद्य ॥ ९ ॥

---

१. B. reads °विकसत्°. २. A. reads मत्सुहृत् and in the margin चामतम्

स्वाद्यन्तृत: स्वरूपस्पन्दोल्लासेन चोदितश्च यदा ।
परवश इव प्रवृत्तस्तदा, न गर्वान्मयेयमारब्धा ॥ १० ॥

( कलापकोऽयम् )

अत्र[1]ादौ तावत्सम्बन्धा-ऽभिधेय-वि[3]षय-प्रयोजनप्रयोजनानीति *षडुच्यन्ते । यतस्तैर्विना श्रोतॄणां शास्त्रं प्रत्यनादर एव स्यादप्रयत्नश्च । इहैवोक्तं हि—

'प्रयत्नेन परीक्ष्यं तत्वमादरात्' ।

इति । शास्त्रमन्तरेण च हेयोपादेयविचारमात्रमपि न भवेत् । किं पुनस्तत्वपरीक्षणम् । तथा चोक्तमागमरहस्यस्तोत्रे—

'साक्षाद्भवान् यदि विधाय न मूर्तिमाद्यां
तत्वं निजं तदवदिष्यदतो ऽतिगुह्यम् ।
नाऽज्ञास्यत त्रिभुवनं ध्रुवमन्ध-मूक-
कल्पं समस्तमसमञ्जसतामयास्यत्' ॥

इति । षाड्गुण्यविवेके ऽपि—

'साक्षात् त्वमेव वा शास्त्रं त्वदीयैव हि सा मति: ।
शब्दद्वारेण सङ्क्रम्य संस्करोत्यधिकारिण: ' ॥

इति । पञ्चरात्रश्रुतावपि—

'यद्वत् सोपानेन प्रासादमारुहेत् प्लवेन वा
नदीं तरेत् तद्वच्छास्त्रेणैव हि भगवान्
शास्ता ऽवगन्तव्य:' ।

इति । तत्रामीषां शास्त्राणां सम्बन्धस्तावत् पञ्चविध: । पर: महान् दिव्य: दिव्येतर इतरेतरश्चेति । तत्रेह सिद्ध-पुरुषयो: प्रायेण दिव्येतर: । अथ वाच्य-वाचकलक्षण: । वाच्योऽर्थ: । वाचकं शास्त्रम् ।

---

१. A. does not insert this. २. A. substitutes तत्र for अत्र. ३. B. does not insert °विषय° and A. does not repeat the word °प्रयोजन°.

* अत्र 'षडुच्यन्ते' इत्युक्तं तथापि सङ्ख्यया न तानि षड्भवन्ति । तदयं लेखकस्य ग्रन्थकर्तुरेव वा प्रमाद इति न ज्ञायते । बहुभिरन्यैरभियुक्तैर्व्याख्यारम्भे ऽनुबन्धचतुष्टयमेव वर्णितं दृश्यते । तत् आदर्शपुस्तकद्वयानुसारिणो मम न दोष इति कल्पयितुमर्हन्ति सूरय: ।

स्पन्दाभिधोऽर्थोऽत्र वाच्यः । तद्वाचकत्वाद् उपचारात् स्पन्दस्याप्येतत्संज्ञा । स्पन्दशब्दस्यार्थो यद्यप्याद्यश्लोके युक्त्यैवोक्तः तथापि धात्वर्थेन सहोच्यते ।

'स्पदि-किञ्चिच्चलने' ।

इति । स्पन्दनात् स्पन्दः । स्पन्दनं[1] च निस्तरङ्गस्याप्यस्य तावत् परमात्मनः युगपन्निर्विकल्पा या सर्वोन्मुख्यवृत्तिता । तस्मात्—

'शान्तषाड्गुण्यरूपस्य यत् स्फुरत् प्रति भोदयः ।
स चाऽऽत्म बल-शक्त्यंशः चिद्रूपः स्पन्दसंज्ञकः' ॥

इति । अतश्चाऽस्मत्पितुर्मातामहाचार्येण महाबलेन—

'यथार्थनाम्नः क्रोधे' ।

इत्यादिनोक्तो विभवोदयो रहस्यस्तोत्रे । उक्तं चेश्वरप्रत्यभिज्ञायाम्—

'या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता[2] ।
अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ॥
व्यापकत्वात्स सामान्यः सर्वसाधारणादपि' ।

इति । अस्य च—

'स्पन्दः सामान्यपूर्वश्च शुद्धात्मा शङ्करः शिवः ।
भावः स्वभावः तत्त्वं च ज्ञातेत्याद्यभिधाः स्मृताः' ॥

इति । अन्यच्च, चित् संवित् ज्ञानं बोधश्चेति पर्यायाः । स च निरावरणचित्स्वरूपत्वाद् दिक्कालाद्यनवच्छिन्नप्रसरोऽद्वितीयः स्वानुभवैक-प्रमाणः शक्तिचक्रेश्वर आत्मचिन्तामणिः उपेयतया ऽभिधेयः । कुतोऽस्य चिन्तामणित्वम् ?—इति चेत् । शास्त्रात् । श्रीपौष्करायां ह्युक्तम्—

'चिन्तामणौ स्वरूपेण न किञ्चिदुपलभ्यते ।
अथ चाभिमतं सूते ब्रह्मैवं सर्वशक्तिकम्' ॥

इति । परमार्थसारे च—

'सर्वाकारो भगवानुपास्यते येन येन भावेन ।
तं तं भावं भूत्वा चिन्तामणिरिव समभ्येति' ॥

इति । ज्ञानसम्बोधे ऽपि—

---

१ A. omits च and reads स्पन्दने for स्पन्दनं. २. A. reads °दूषिता.

'स्वभावादेकरूपापि नानात्वं प्रतिपद्यते ।
ज्ञानस्य शक्तिः सङ्कल्पैर्लक्ष्मीश्चिन्तामणेरिव' ॥

इति । अस्य च शास्त्रकारेणान्वर्थसंज्ञया ऽऽत्यन्तिकश्रेयस्करत्वात् शिव-शङ्करशब्दाभ्यां निर्देशः कृतः । वस्तुतस्तु[1] निर्नामक एव [2]सः । प्रोक्तं चैत[3]त्सिद्धनाथेन अभेदा[4]र्थकारिकासु—

'वस्तुनो भावशून्यस्य त्वग्राह्यस्य निराकृतेः ।
कल्पनामात्रमेवैतत् यच्छिवव्यपदेशनम् ॥
नेत्थं विभोर्विवर्तो ऽस्ति परिणामश्च न क्वचित् ।
अथ वा द्वयमप्यस्तु तथाप्यस्य न खण्डना' ॥

इति । संवित्प्रकाशे ऽपि—

'इति निर्मलबोधैकरूपे देहपरिग्रहः ।
विवर्त-परिणामाभ्यां द्वाभ्यामप्युपपद्यते ॥
विव[5]र्तेऽप्यतथारूपस्तथा भासि त्वमच्युत ।
परिणामे स एव त्वं सुवर्णमिव कुण्डले' ॥

इति ।

ननु—कथमस्य निरावरणत्वम्? । यतः सुख-दुःख-मोहात्मकगुणादिस्पन्दनिष्यन्दैरावृतमेव पश्यामः । अत्रोच्यते । एते हि ज्ञेयत्वात् स्वयं निःसत्ताकाः । ज्ञातृसंश्रयात्तु लब्धप्रतिष्ठा इवाप्रबुद्धबुद्धीनां स्वं शुद्ध-बुद्ध-स्वरूपं विहाय अहम्प्रत्ययेन कामकामात्तादात्म्यम्प्रतिपन्नानां निजधर्मैरधिकस्य सङ्कोचरूपतामापादयन्त्यविद्यारूपत्वात् । न पुनः स्वस्वरूपस्थितानाम् । उक्तं चेहापि—

'गुणादिस्पन्द—' ।

इत्यादि । धातुसमीक्षायां च—

'अविद्याशबलस्यास्य स्थितं मेयत्वमात्मनः ।
गृहीतं न निजं रूपं शबलेन तदात्मना ॥

१. B. substitutes च for तु. २. B. does not insert सः. ३, B. omits एतत्.
४. A. reads अभेदकारिकासु. ५. B. reads. विवृत्तात्र°.

सा चाऽनृतात्मिका ऽविद्या नानृतस्य हि वस्तुता ।
नाऽवस्तु वस्तुनो नाशं विकारं वा करोत्यतः ॥
नाच्छादितस्य तमसा रज्जुखण्डस्य विक्रिया ।
नाशो वा क्रियते यद्वत् तद्वन्नाऽविद्ययाऽऽत्मनः ॥
नाऽतः स्वतो न परतो बन्धो ऽस्य परमात्मनः ।
बद्धो ऽथाऽविद्यया जीवो मुक्तिस्तस्य हि तत्क्षये' ॥

इति । तत्त्वयुक्तौ च–

'येन येन हि बद्ध्यन्ते जन्तवो रौद्रकर्मणा ।
सोपायो न तु तेनैव मुच्यन्ते भवबन्धनात्' ॥

इति । कुलयुक्तौ च–

'प्राणिनां पतनं येन तेनैवोत्पतनं स्मृतम् ।
अज्ञस्तु[1] बद्ध्यते येन ज्ञाता[2] तेनैव मुच्यते' ॥

इति । तथा मयाऽपि–

'सीदति येनैव जडः प्राज्ञस्तेनैव सन्तरति दुःखात् ।
पिण्डितमयोऽप्सु मज्जति तदेव पात्रीकृतं प्लवते' ॥

इति । गीतासु चेदृगेवाऽत्र युक्त्योपायः प्रदर्शितः–

'आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी' ॥

(भ० गी० २. ७०)

इति । तथा–

'राग-द्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति' ॥

(भ० गी० २. ६४)

इति । अन्यच्च–

'असन्त्यक्तात्मभावानां विषयाननुगृह्णताम् ।
विज्ञातपरमार्थानां जीवतामेव मुक्तता ॥
ते चैवास्यात्मनः स्पन्दो नटस्येवान्यरूपता' ।

इति । उक्तं च योगिनाथेन ह्येतच्चिच्छक्तिसंस्तुतौ–

---

१. B. reads अज्ञत्वं. २. B. reads ज्ञात्वा.

'तदेवं त्वत्प्रवृत्त्या त्वन्निवृत्त्या चोदयेतरे ।
जुषन्ते येन तत्वानि तान्यतः स्पन्द एव ते ।
वैसादृश्येऽपि कार्यस्याऽस्याच दृष्टान्तमाह यत्— ॥
ज्वलनाद्धूमोद्गतिरिव विविधाकृतिरम्बरे गता भाति ।
तद्वद्विष्णोः सृष्टिः स्वभावजा द्वैतरूपेऽयम् ॥
प्राश्यानश्चिद्रसस्यौघः साकारत्वमुपागतः ।
अवश्यायः प्रबोधार्के तूदिते स्वस्वभावभाक्' ॥

इत्यलमतिविस्तरेण । ग्रन्थगौरवभयात् । इह चैतदेवाऽऽसमाप्तेर्विचार्यते । उपायोपेयप्रतिपादनमेव शास्त्रस्य प्रयोजनम् । या तदवबोधादुपेयस्वरूपापत्तिः स्थिरा तदेव प्रयोजनप्रयोजनमिति । अस्य चेदं दर्शनं स्वतन्त्रम् । प्रागुक्तोपपत्त्या सर्वशास्त्रसमुद्भूतं चाद्वैतप्रतिपादकत्वं निर्बाधमेव । यतो विमर्शात्मस्पन्दभूम्युपारोहात् पश्यन्त्यादिक्रमेण वाक्प्रसवलाभः । उक्तं च संवित्प्रकाशे—

'संविन्मूलाद्वर्णरूपाज्ज्ञातस्तम्भात् सरस्वती ।
प्रागघोषा सनादाऽनु पुण्यतीर्था प्रवर्तते ॥
तत्प्रवृत्त्या प्राणयति शक्तिः सा विश्वमोजसा ।
प्रतियान्ती पुनस्त्वासां संकोचयति सम्भवम् ॥
कार्यानुरूपं सा रूपं तथा नामापि बिभ्रती ।
निर्वाहयति विश्वस्मिंश्चित्रां यात्रां चराचराम्[1]' ॥

इति । तद्विना च सर्ववादिनां सत्तैव नास्ति । अतस्ते निरस्ता एव स्थिताः । अत एवेश्वरप्रत्यभिज्ञायामादिसिद्धिरित्युक्तम् —

'कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे ।
अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः ?' ॥

इति । तदप्यत्र ये मोहाद्विप्रतिपद्यन्ते तेष्विदमापतितम् । यथा कश्चिन्माण्डलिको राजा चक्रवर्तिनः सकाशात्[2] किञ्चिच्चतुरङ्गादि साधनं प्राप्यानन्तरं साम्राज्यजिगीषया तेनैव सह युद्धं कर्तुमिच्छति तद् आत्मविनाशायैव तस्य स्यात् । एवं तेषामपि तत् । इत्थमप्यस्याजय्यत्वं सिद्धमेवेति ।

१. A. reads चराचरे. २. B. reads काक्षा which is meaningless.

अथ सङ्ग्रहग्रन्थकृता समग्रमग्ग्यग्रन्थार्थं गर्भीकृत्य ग्रन्थनिष्पत्त्यर्थमभिमतदेवतां स्तोतुं यः-श्लोक उपन्यस्तस्तस्यार्थः प्राक्श्लोके ध्वनितोऽपि वितत्योच्यते-

**यस्योन्मेष-निमेषाभ्यां जगतः प्रलयोदयौ ।**
**तं शक्तिचक्रविभवप्रभवं शङ्करं स्तुमः* ॥ १ ॥**

इति । तं भगवन्तं शङ्करं स्तुमः नुमः । भोगापवर्गाख्यं शं श्रेयः सुखं वा करोतीति शङ्करः । अमलःस्वस्वभावः यः प्रागभिधेय[1] तयोपात्तः । इह हि जीवन्मुक्ततैव मोक्षः । उक्तं चेहाऽग्रे-

'इति वा यस्य संवित्तिः' ।

इत्यादि । तस्याश्चैतद् द्वयमप्यन्तस्थम् । यतः सा ज्ञत्व-कर्तृत्व-भोक्तृत्वेश्वरतारूपा । उक्तं चेह-

'तदास्याकृत्रिमो धर्मः' ।

इत्यादि । तथा-

'यदा त्वेकत्र' ।

इत्यादि । सर्वज्ञभैरवे च-

'नान्यत्र गमनं स्थानं मोक्षोऽस्ति सुरसुन्दरि ।
अज्ञानग्रन्थिभेदो यः स मोक्ष इति कथ्यते' ॥

इति । मोक्षधर्मेषु-

'चित्तमेव हि संसारो रागादिक्लेशभूषितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते' ॥

इति । बौद्धे च-

'रागादिमलिनं चित्तं संसारस्तद्विविक्तता ।
संक्षेपात् कथितो मोक्षः प्रहीनावरणैर्जिनैः' ॥

इति । नारदसङ्ग्रहे च-

'सर्वो विकल्पः संसारो नान्यो बन्धो विकल्पतः[3]' ।

इति । ग्रन्थकर्तुश्च स्वस्वभावसम्बोधने-

---

१. B. reads °धेय उपेयात्तः. २. A. reads भवान्त. ३. B. reads विकल्पः for विकल्पतः.

* 'विज्ञानदेहात्मकस्य शक्तिचक्रैश्वर्यस्योत्पत्तिहेतुत्वं नमस्कारद्वारेण प्रतिपाद्यते'-इत्युक्तेर्वृत्तिकर्तुः 'नुमः' इत्येव पाठः सम्मत इति दृश्यते ।

'बन्धनं बन्धकृद्बद्धस्त्रिष्वप्येको न [1]भिद्यते ।
स्वविकल्पकृतैर्बन्धैर्बद्ध्यते त्वनिशं जगत्' ॥

इति । आत्मसप्ततौ च—

'वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता ।
विकल्पघटितावेतावुभावपि न किंच न' ॥

इति । पञ्चरात्रेऽपि—

'त्रिविधो दोषः । स्वभावजस्तामसो विकल्पजो राजसः' ।

इत्यादि—'यावत्तेनैव देहेन वशीभवति भगवद्भूतस्तदा
सर्वज्ञो भवति सर्वदर्शी सर्वेश्वरः सर्वशक्तिः' ।

इत्यादि । अत एवाऽत्र भगवच्छब्दः प्रयुक्तः । यतः—

'ऐश्वर्यस्य समग्रस्य ज्ञानस्य यशसः श्रियः ।
वैराग्यस्य च मोक्षस्य षण्णां भग इति स्मृतः[2] ॥
भगवद्व्यतिरेकेण न च स्तुत्योऽस्ति मानिनाम्' ।

इति । तत्स्वरूपानुप्रवेश एव स्तुतिः । अत्र त्वभिन्नत्वमेवाभिमतम्[3] ।
अन्यथा कः स्तोता? कः स्तुत्यः? का वा स्तुतिः? । यस्मात्—

'विरुद्धमेतदद्वैतात् स्वच्छायोल्लङ्घनं यथा' ।

इति । उक्तं च—

'वेद्यं स्वरूपतां नीत्वा यदा जानन्ति वेदनम् ।
तदानीं वेद्यता का स्यात्? का वा वेदनता परा'? ॥

इति । केवलं त्वत्र शब्दकृतो भेदः । सोऽपि विकल्पमूलत्वात्तेषाम् ।
उक्तं च—

'विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
यथा 'राहोः शिर' इति धारा वा सर्पिषो यथा' ॥

इति । अन्यच्च—

'यदभिन्नं स्वसंवित्तौ तत् परस्य यदोच्यते ।
तदभिन्नमिवाभाति शाब्दीं भूमिमुपागतम्' ॥

इति । उक्तै[4]र्विना व्यवहारोऽपि न निर्वहति । उक्तं संवित्प्रकाशे—

---

१. B. reads विद्यते. २. A. reads इतीर्यते. ३. B. reads स्वभिरतम् for अभिन्नत्वमेवाभिमतम्. ४. B. reads उच्चैः°

'वागेवास्याः कारणं विश्ववृत्तेर्न्याय्यं चैतन्नागमः केवलोऽयम् ।
नाऽसङ्कल्पं किंचिदस्तीह कार्यं वाचं विना न विकल्पोऽस्ति कश्चित्' ॥

इति । एषाऽपि बोधमूलेति प्रागेवोक्तम् । अन्यच्च जयाख्यसंहितायाम्—

'निष्कम्पबोधसामान्यरूपो माता पुरा स्वयम् ।
ये शब्दजनिता भावाः सूक्ष्मसूक्ष्मतराखिलाः ॥
सामान्यबोधशब्दस्य पश्यतस्त्वेकतां गताः ।
यदाऽभिमुखमायान्ति सङ्कल्पाद्युत्थितस्य च ॥
शब्दरूपपदार्थस्य शब्दः स परमः स्मृतः ।
सङ्कल्पपदवीरूढः स्फुरत्यन्तः स्थितः स्फुटम् ॥
पदार्थोपरमः शब्दो मध्यमं विद्धि तं मुने ।
चिद्वायुकरणोत्थासु प्रयत्नपदवीषु च ॥
वाच्य-वाचकभावेनाऽभिव्यक्तः स्थूल उच्यते ।
दृश्यादृश्येषु भावेषु योऽभिव्यक्तिं प्रयाति च ॥
स तु स्थूलतरश्चैव व्यवहारेऽखिले स्थितः' ।

इति । अन्यत्राऽपि—

'शरीरजो वा शाब्दो वा मानसो वा समुद्गतः ।
व्यवहारोऽप्यसौ नास्ति यत्र त्वं नाथ नाग्रगः' ॥

इति । उपपन्नमेतत् । तं स्तुम इत्युक्तं तं कम्? यदुन्मेषादौन्मुख्याज्जगतो विश्वस्योदयः प्रभवः सन्ततिरिति यावत् । निमेषाद्विश्रामात् प्रलयोऽप्ययः । न ह्येतद्व्यतिरिक्तस्य जगतोऽस्त्युदयोऽप्ययो वा ।

'किन्त्वीशशक्तिप्रसर विरामौ प्रभवाप्ययौ' ।

इति सिद्धम्[1] । उक्तं च—

'समुदेति जगदशेषं तवोदयविमलसंविदाकारे ।
अस्तं याति समस्तं पुनरपि निजरूपरूढायाः' ॥

इति । ग्रन्थकृताप्युक्तं तत्त्वविचारे—

'शक्तिप्रसर-सङ्कोचनिबद्धावुदय-व्ययौ ।
यस्यात्मा स शिवो ज्ञेयः सर्वभावप्रवर्तकः' ॥

इति । कक्ष्यास्तोत्रेऽपि—

१. B. reads सिद्धोक्तम् for इति सिद्धम् । उक्तं.

'त्वदाशयोन्मेष-निमेषमात्रमयौ जगत्सर्ग-लयाविती्दृक् ।
स्फुटे, स्फुटं त्वन्महिमाऽवभाति विचित्रनिर्माणनिदर्शनेन ॥
ज्ञानक्रियादिगर्भेच्छाशक्तियः प्रसरात्मकः ।
सङ्कल्पोक्तः स उन्मेषः प्रोक्तं ह्येतत्स्वतन्त्रके ॥
यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते ।
क्रिया-करणसंयोगात् पदार्थस्योदयो भवेत्' ॥

इति । तद्विरतिश्च निमेषः । उदय-प्रलयाविति वक्तव्ये प्रलयोदयाविति यदुक्तम् तद्वृत्तभङ्गभयात् । विपर्ययेण चोन्मेषशब्दस्य मङ्गलार्थत्वादादिप्रयोगः । सृष्टेश्चाद्यत्वात् ।

'यस्माद्वस्त्वभिधेयं नातः शब्दक्रमोऽत्र भवबन्धः ।
तत्पद्यो नीचः स्याद्ये तु ब्रुवते यथासंख्यम्' ॥

इति । आभ्यामस्य जगत्सृष्टि-संहारयोः कारणभावः प्रोक्तौ भुक्ति-मुक्ती च । तत्रोन्मेषाद्भोगो नानाविधः । निमेषान्मोक्षो निस्तरङ्गरूपता । अन्यच्च । तं किंभूतम्? । शक्तिचक्रविभवप्रभवमिति ।

'इच्छाख्यैका विभोः शक्तिः प्राग्द्विधा ज्ञ-क्रियाभिदा' ।

इति । तन्नानात्वं चक्रशब्देनोक्तम् । तदुक्तं मालिनीविजये—

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते ॥
सैकाऽपि सत्यनेकत्वं यथा गच्छति तच्छृणु ।
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ।
एवं भवत्विदं सर्वमिति कार्योन्मुखी यदा ॥
जाता तदैव सा तद्वत्कुर्वन्त्यपि क्रियोच्यते ।
एवमेषा द्विरूपाऽपि पुनर्भेदैरनेकताम्— ॥
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी ।
तत्र मातृत्वमापन्ना पञ्चाशद्वर्णमालिनी' ॥

इति । शक्तीनां चक्रं शक्तिचक्रं मातृवर्गः । तच्च मुख्यं चतुर्विधम् । उक्तं च—

'खेचरी गोचरी चाऽथ दिक्चरी भूचरीभिदा ।
पराদিभारतीसंस्थं शक्तिचक्रं चतुर्विधम्' ॥

इति । तथा—

'आनन्देच्छा-ज्ञ-क्रियाख्यं खेचर्याद्यं चतुष्टयम्' ।

इति । तस्य यो विभवो विभूतिर्विस्तरो वा तस्याऽपि प्रभवम् । प्रभवत्यस्मादिति प्रभव उत्पत्तिस्थानम् । यतः सर्वासां शक्तीनां सस्फारचिच्छक्त्यवगमनाच्छक्तित्वम् । सा च तदभिन्नैव । प्रोक्तं हि श्रीजयायाम्—

'तत्व निर्मुक्तदेहस्य केवलस्य चिदात्मनः ।
य उदेति महानन्दः सा शक्तिर्वैष्णवी परा' ॥

इति । विष्णुयामले च—

'पाहि पाहीति वचनात्त्राणानस्वविग्रहाः ।
परापरबलस्पर्शात् स्वस्वरूपसमाश्रयात् ॥
निहता दानववराः परं वीर्यं प्रकाशितम् ।
तेन ता मातरः प्रोक्ता विश्वसम्भवकारणात्[1]' ॥

इति । अत एव ग्रन्थकारेणासां विज्ञानदेहात्मकत्वमुक्तम् । अथ वा अलमत्र । किमनेनासां रहस्यस्वरूपातिप्रकाशनेन योगिनीनां मुखगतेन । शक्तयश्च खेचर्याद्या वेच्छाद्या वा पराद्या वा अघोराद्या वा वामाद्या वा ब्राह्म्याद्या वा अन्या वैष्णव-शैव-सौर-बौद्धाद्युक्ता वा । अथ वा 'शब्दराशिसमुत्थस्य' इत्यादिना[2] वक्ष्यमाणअकाराद्यक्षररूपाः करणरूपा[4] वा भवन्तु । एतावत् प्रयोजनमत्र—आभिर्यदासां सर्वासां स्पन्दरूपो भगवानेव प्रभव इति प्रतिपादनम् । तथा च मायावामनसंहितायाम्—विष्णु-शिव-सूर्य-बुद्धादिरूपतया तत्तच्छक्तिचक्रपरिवारयुतस्तत्कारणं भगवानेक एव ध्यानभेदेनोपास्यत्वेनाभिहितः । उक्तं च कुलयुक्तौ—

'वेदान्ते[5] वैष्णवे शैवे सौरे बौद्धे ऽन्यतोऽपि च ।
एक एव परःस्वात्मा ज्ञाता ज्ञेयं महेश्वरि' ॥

इति । अन्यच्च—

1. A. reads °कारणाः. 2. A. inserts वा after इत्यादिना. 3. A. reads °माणप्रकारा.° 4. A. reads कारणरूपाः. 5. B. reads वेदान्त°.

यस्योन्मेष-निमेषाभ्यां जगतः प्रलयोदयौ

इति 'तं स्तुम' इत्येतावता सर्वमुक्तं स्यात् । अत्यन्तास्फुरणाच्छक्तिचक्रस्य । उक्तं हि रहस्यशास्त्रेषु—

'शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयश्च[१] जगत् सर्वं शक्तिमांस्तु महेश्वरः' ॥

इति । यत्तु 'शक्तिचक्रविभवप्रभवम्' इति पदमुपन्यस्तं तदुद्देशार्थम् । साभिप्रायत्वान्महाकवेः । उक्तं च ध्वनौ—

'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यतत् प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥
तेनैतदेवशक्तीनां यतोऽन्तः प्रसरोदयौ ।
तदुल्लालम्भनात्तासां प्रभुत्वं प्राप्यते चिरात्' ॥

इति । उक्तं चेह—

'अपित्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत्' ।

इति ।

यदिदं पदमग्रेऽस्ति परीक्ष्यं तत्वमादरात् ।
इतः प्रभृति सर्वत्रेहानुयोज्यं तु तद्बुधैः ॥

इति ॥ १ ॥

ननु—संसार्यवस्थायां कथं तस्करता[२]ऽऽत्मनि? ।
इत्याशङ्कोत्यदुर्दोषपरिहाराय तूच्यते ॥ —

**यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम् ।**
**तस्यानावृतरूपत्वान्न निरोधो[३]ऽस्ति कुत्रचित् ॥ २ ॥**

इति । यत्र यस्मिन् स्पन्दतत्वे इदं सर्वं जगल्लक्षणं ज्ञानरूपतया शक्त्यात्मना स्थितं निमेषावस्थायां तस्यानावृतरूपत्वाद् बोधरूपतयाऽनाच्छादितस्वरूपत्वाद्धेतोर्न कुत्रचिन्निरोधोऽस्ति । यतो बोद्धुरस्य स्वयं सत्तैव नास्ति । अबोधरूपमनावृतमेवावस्याद्वयेऽपि । उक्तं च—

---

१. A. reads शक्तं यच्च for शक्तयश्च, २. B. has शस्करता. but it is difficult to find out what the first letter was. ३. A. reads. विरोधो.

'यथा हेम्नो रूपकेषु वैचित्र्यं स्वान्न रिच्यते ।
अथ नित्यस्वरूपस्य तथा ते विश्वरूपता ॥
यथा गलितरूपस्य हेम्नः पिण्डात्मना स्थितिः ।
तथा गलितवेद्यस्य तव शुद्धचिदात्मता' ॥

इति । ज्ञानसम्बोधेऽपि—

'विश्वस्याश्रय आकाशं न विश्वं नभसो भवेत् ।
ज्ञानं नभइवानन्तं ज्ञेयं विश्ववदल्पकम् ॥
आकाशस्येव वाऽन्येन प्रतिबन्धो न केन चित् ।
व्यापित्वात् तद्वदस्यापि ज्ञानस्याऽप्रतिबन्धता' ॥

इति ॥ २ ॥

सर्ववृत्त्युपसंहारो निरोधो मास्तु तस्य तु ।
जाग्रदाद्यास्ववस्थासु कुतः स्यादनिरुद्धता ? ॥—

**जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति ।**
**निवर्तते निजान्नैव स्वभावादुपलब्धृतः ॥ ३ ॥**

इति । जाग्रदादिविभेदे प्रसर्पति प्रसरत्यपि सति तत् स्पन्दतत्त्वं निजा-दात्मीयात् स्वभावादुपलब्धरूपात् स्वसंवित्स्वरूपान्नैव निवर्तते । कुतः ? उपलब्धृतो हेतोर्वा । यस्मादुपलब्धरूपत्वं तिसृष्वप्यवस्थासु साधारणम् । उक्तं च—

'अवस्थास्वेव भेदोऽयं नाऽवस्थातुः कदाचन ।
यथा विषस्याङ्कुरादौ तच्छक्तेर्नतु भिन्नता' ॥

इति । जाग्रत्स्वप्नयोस्तावत्संवेदनं सर्वेषां प्रसिद्धमेव सुषुप्ते[१]रुत्तरकालं 'सुखमहमस्वाप्सम्'—इत्याद्यन्नस्याऽपि संवेदनात् संवेत्ता निर्दिष्ट एव भवति । उक्तं च—

'वेल्लत्सु प्रतिबिम्बेषु जलस्पन्दानुवर्तिषु ।
यथेन्दोर्न क्रियावेशस्तथा ऽत्र परमात्मनः' ॥

इति । अन्यच्च । विभेदे विशेषेण भेदो विभेदः तस्मिन् । किंभूते ? तदभिन्ने । तस्यैव ताद्रूप्येणावस्थानात् । तथा च—

१. B. reads सुषुप्तेष्युत्तर°

'अक्षैर्योऽर्थग्रहो दृष्टस्तज्जाग्रदिति कथ्यते ।
यत्तैर्विनार्थस्मरणं मनसा स्वप्नसंज्ञितम् ॥
यत्रार्थ-स्मरणे नस्तस्तत् सौषुप्तमुदाहृतम् ।
शुद्धबोधैकरूपो योऽवस्थाता सैव तुर्यता' ॥

इति ॥ ३ ॥

अवस्था एव विश्रान्तर्नावस्थातेति ये जगुः ।
प्रत्यभिज्ञादियुक्त्येयं तन्निरासाय कारिका ॥—

**अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः ।**
**सुखाद्यवस्थानुस्यूते वर्तन्ते ऽन्यत्र ताः स्फुटम् ॥ ४ ॥**

इति । अहं सुखीत्याद्याः याः संविदः संवेदनानि अवस्थाः । ताः संविद्भ्योऽन्यत्र संवेत्तर्यवस्यातरि सुखाद्युपलब्धरि उपरागतया स्फुटं कृत्वा वर्तन्तेऽवतिष्ठन्ते । संवेत्तारं विना संवेदनस्याऽभावात् ।

'नद्योऽब्धाविव तादात्म्यं तत्रविष्टाः प्रयान्ति वा ।
क्षणिकज्ञानिनां ह्यव नतु ता एव केवलाः' ॥

इति । यस्मात्—

'कार्य-कारणभावो हि बाध्य-बाधकताऽपि च ।
पूर्वापरैकमातारमन्तरेण प्रसिद्ध्यतः' ॥

इति । तत्र हि—

'प्रामाण्यं क्षणिकत्वेन प्रत्यक्षेणोपपद्यते ।
प्रागभावादुनरज्ञानदार्ढ्यात् प्रामाण्यसिद्धितः ॥
प्रतिक्षणमथान्यत्वात् सामान्यस्याग्रहे सति ।
विलक्षणाः क्षणाः सर्वे प्रामाण्य किंनिबन्धनम् ? ॥
सम्बन्धस्याग्रहश्चापि तेन मानस्य का गतिः ?।
मिथ्याज्ञानस्य मिथ्यात्वं ब्रूहि वा किंनिबन्धनम् ? ॥
क्षणान्तरे शुक्तिकायां रजतं केन वार्यते ?।
भिन्नज्ञानस्य कर्तृत्वे सर्वे प्रामाण्यमाप्नुयात् ॥

१. B. reads प्रागभावा°

अन्यस्वरूपसंसिद्धावन्यसिद्धिर्भवेद्यदि ।
घटस्वरूपसंसिद्धौ पटस्यावगमो भवेत् ॥
यो ऽयं स एवाऽयमिति प्रत्ययः स्थिरकालजः ।
कर्तुं शक्यो न तद्वादिप्रामाण्यात् क्षणिकैस्ततः ॥
प्राग्विज्ञानस्मृतिं प्रत्यभिज्ञा नित्यं प्रतिष्ठिता ।
अतो नित्यस्वभावस्यैवात्मनः कर्तृतोदिता'

इति । किं वा बहूक्त्या—

'एकप्रमातृभावात् स्यात् क्षणिकत्वादनिश्चयात् ।
प्रमाणमप्यप्रमाणं स्यात् बौद्धानां हि निराश्रयम्' ॥

इति । उक्तं च बौद्धायनसंहितायाम्—

'कार्य-कारणभावस्तु नास्ति ज्ञाने क्षणक्षयः ।
क्षणं द्वितीयं नास्ते चेत् स्मृतिबीजं कथं भवेत्? ॥
जनकं तत् कथं नष्टमनष्टं वाप्यनष्टकम् ।
नष्टस्य जनकत्वं चेदभावाद्भावसन्ततिः ॥
जनकत्वे त्वनष्टस्य क्षणभङ्गः प्रहीयते ।
द्वितीयं यत्क्षणं तिष्ठेत्तदास्ते शतमप्यथ ॥
जनकत्वेऽर्थनिष्ठस्य अर्थे ऽभावमेति तत् ।
तस्माद्भावाः स्थिराः सर्वे न च्यवन्ते स्वरूपतः ॥
आत्मावबोधविषये स्वस्थिराः क्षणिका न ते ।
बाध्य-बाधकभावेऽपि न स्यान्निश्चायकं विना ॥
शुक्तौ हि रजतज्ञानभ्रान्तिभङ्गोऽस्ति नान्यथा ।
तस्मात्ज्ञानं नित्यमेकं क्षणिकानि बहूनि नो' ॥

इति । सत्कार्यसिद्धौ च—

'न हि स्वनिष्ठे विज्ञाने इतरेतरवेदनम् ।
तस्मात् पूर्वापरावस्था (प्रमाण[2]) परिपिण्डितः ॥—
एकः प्रमाता चित्राभिर्वृत्तिभिर्व्यवहारभाक्' ।

इति । प्रत्यभिज्ञायां च—

---

१. A. substitutes वः. २. Both manuscripts omit three letters here.

'एवमन्योन्यभिन्नानामपरंपरवेदिनाम् ।
ज्ञानानामनुसन्धानजन्मा नश्येज्जनस्थितिः ॥
न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः ।
स्यादेकश्चिद्वपुर्ज्ञान-स्मृत्यपोहनशक्तिमान्' ॥

इति । गीतास्वपि–

'मत्तः स्मृतिर्ज्ञानमपोहनं च'

(भ॰ गी॰ १५॰ १५.)

इत्यलं कुतर्काश्मनां चर्वणेन । अन्यच्च । किंभूते संवेत्तरि ? सुखाद्यवस्थासु बोद्धृरूपतयानुस्यूतेऽनुविद्धे । मणिषु सूत्रमिव सदानुस्यूते एव सर्वास्ववस्थासु । यस्माद्य एवाहं प्राक्सुखी स[1]एवाद्य दुःखी । आदिग्रहणाद्रक्तोऽहं विरक्तोहं मूढोऽहं प्रबुद्धोऽहं धनादिमानहमिति स्मृतिप्रत्यभिज्ञानुसन्धानात् । नन्वेवमसौ सावरणः । नैतत्सत्यम् । विकल्परूपतया तासामनित्यत्वात् । तद्व्यतिरिक्तत्वाच्च संवेत्तुः तास्वविद्यावरणादुपरागमात्रस्य । उक्तं च भर्तृहरिणा–

'नाच्छादितस्य तमसा रज्जुखण्डस्य विक्रिया ।
नाशो वा क्रियते यद्वत्तद्वन्नाविद्ययाऽऽत्मनः' ॥

इति । संवित्प्रकाशे च–

'अत्यन्ताच्छस्वभावत्वात्स्फटिकस्य यथा स्वकम् ।
रूपं परोपरक्तस्य नित्यमेवोपलभ्यते ॥
तथा भावसमासक्तं भगवंस्तावकं वपुः ।
अत्यन्तनिर्मलतया पृथक्त्वै[2]र्नोपलभ्यते ॥
नैतावताऽसौ स्फटिकः पृथङ्नास्त्येव रञ्जकात् ।
भावरूपपरित्यक्ता तव वा निर्मला तनुः' ॥

इति । [3]तथा–

'उपरागेऽपि शुद्धत्वं न त्यक्तमनया प्रभो ।
परित्यज्य निजं रूपं संविदाख्यां कुतश्च यत् ॥

---

१. B. does not add ए°. it reads स वाद्य. २. A. reads पृथक्त्वैः. ३. A. reads यथा,

अथाऽप्राप्यैव तद्रूपं भवेद्रूपान्तरानुगा ।
तद्रूपापि हि दृश्येत कारणेऽस्याऽपि सम्भवात्' ॥

तथाचैव—

'सदैव[1] शुद्धोऽनुभवो यम्प्रत्याकारकर्बुरः ।
आकारान्तरसञ्चारकाले तस्यापि निर्मलः ॥
यथा जात्या सितं वस्त्रं रक्तं रागेण केन चित् ।
तत्पदप्राप्तशुक्लत्वं[2] पुना रागान्तरं श्रयेत् ॥
एवं शुद्धा चितिर्जात्या यदाकारोपरागिणी ।
तत्यागापरसञ्चारमध्ये शुद्धैव तिष्ठति' ॥

इति । तथा—

'नीले पीते सुखे दुःखे चित्स्वरूपमखण्डितम् ।
विशिनष्टि विकल्पस्तच्चित्रयोपाधिसम्पदा' ॥

इति ॥ ४ ॥

तद्व्यतिरिक्तस्य च रूपमाह—

**न दुःखं न सुखं यत्र न ग्राह्यं ग्राहकं न च ।**
**न चास्ति मूढभावोऽपि तदस्ति परमार्थतः ॥ ५ ॥**

इति । तत् स्पन्दतत्वं परमार्थतोऽस्ति । नित्यत्वात्तस्य । यत्र न दुःखमाध्यात्मिकादि । न सुखं वैषयिकम् । न ग्राह्यं घट-पटादि । न ग्राहकमहमिदं गृह्णामीति प्राकृतं सविकल्पाहङ्काररूपत्वमविद्यात्मकत्वादहङ्कारस्य । न त्वनेनाधिष्ठातृरूपस्य ग्राहकस्याभाव उक्तः । उपेयत्वात्तस्य । उक्तं च तत्वगर्भे—

'परमार्थेन न ग्राह्यं ग्राहकं वा न किंचन ।
यस्मादृते तत् स्वभासमस्वाभासमिवेक्ष्यते' ॥

इति । एवं तर्हि तत् पाषाणप्रख्यं मूढत्वमेव शून्यं वा? अत्रोच्यते—

नचास्ति मूढभावोऽपि

इति । कुतः? चिद्रूपत्वात् । उक्तं च मुनिना—

---

१ B. reads सदेव. २. A. reads °शुक्तत्वं.

'यथा शीतोष्णयोर्मध्ये काले नोष्णो न शीतलः ।
एवं हि सुख-दुःखाभ्यां हीनमस्ति पदं विभोः' ॥

इति । स्तुतौ च—

'समुदेति यथा भौवर्धिना भानुर्नभस्तले ।
वेद्यं विनैव भगवन् भवान् केन स्वतोदयः' ॥

इति । तथा—

'यथोद्भूतविशेषस्य सामान्यस्य निजा स्थितिः ।
पृथङ् न शक्या निर्देष्टुं न च तचाऽस्ति तावता ॥
एवं नित्या निजा शुद्धा सुख-दुःखाविशेषिता ।
स्वसंवेदनसंवेद्या तव संविन्मयी स्थितिः' ॥

इति । नागार्जुनेनाप्युक्तम्—

'सर्वालम्बनधर्मैश्च सर्वतत्त्वैरशेषतः ।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः' ॥

इति । आलोकमालायां च—

'विरुद्धत्वात्तमोवृत्तेर्नावकाशं ददाति या ।
साऽवस्था काऽप्यविज्ञेया मादृशा शून्यतोच्यते ॥
न पुनर्लोकरूढयैव नास्तिक्यार्थानुपातिनी' ।

इति ॥ ५ ॥

अचास्याऽमूढत्वा-ऽस्तित्वयोः सन्दानितकेनोपपत्तिमाह—

**यतः करणवर्गो ऽयं विमूढो मूढवत्स्वयम् ।**
**सहान्तरेण चक्रेण प्रवृत्ति-स्थिति-संहृतीः—॥ ६ ॥**
**लभते, तत् प्रयत्नेन परीक्ष्यं तत्वमादरात् ।**
**यतः स्वतन्त्रता तस्य सर्वत्रेयमकृत्रिमा ॥ ७ ॥**

इति । यतो यस्मात् स्पन्दतत्त्वादयं बाह्यः करणवर्गो बुद्धि-कर्मेन्द्रियाख्योऽन्तःकरणचक्रेण सह विशेषेण मूढचेतनो विचेतनवत् स्वयं प्रवृत्ति-स्थिति-संहृतीर्लभते ।

---

१. A. reads संव°.  २. B. reads सतो°.

एषोपपत्तिहेतुस्तु दृष्टान्तो भ्रामको मणिः ।
यथा वाताग्निसंपर्कोदयःपिण्डोऽग्निवद्भवेत् ॥
दाह-पाक-प्रकाशादौ शक्तस्तद्वदयं गणः ।

इति । एवं योऽन्येषां चैतन्यापादने समर्थः स कथं निःस्वभावः ? उक्तं षाड्गुण्यविवेके—

'स्वदेहसाक्षिकं चैतत् सर्वस्य ज्ञानचेष्टितम् ।
ज्ञानानधिष्ठितः कायो लुठत्येव यतो धृतः ॥
अत एव जडानामप्यधिष्ठातृकृता धृतिः ।
गम्यते गगने ग्रावा न धार्येताऽन्यथा कथम्'? ॥

इति । तस्मात् तत्त्वं प्रयत्नेनादरात्परीक्ष्यम् । प्रयत्न उद्योगरूप उत्साहः । आदरः श्रद्धा । अत्र च परीक्षणमुद्योगबलानुप्रवेशेन स्वीकरणम् । उक्तं चेह—

'अतः सततमुद्युक्तः'—

इत्यादिना । सिद्धोक्तं च—

'अदृश्यं नेत्रवद् ब्रह्म द्रष्टृत्वं चाऽस्ति नेत्रवत् ।
स्वात्मन्येवोपलम्भोऽस्य दर्शनं घटवन्न तु' ॥

इति । यतो यस्मात्स्येयमकृत्रिमा निजैव स्वतन्त्रता सर्वत्र । तेनै-तदुक्तम्—यथास्य करणादिषु चैतन्यापादेन स्वातन्त्र्य तथा परपुरादिष्वपि सम्भाव्यते ऽभ्यासात् ॥ ७ ॥

तदिच्छयास्तु सामर्थ्यं करणानां स्वतन्त्रता ।
सर्वत्रोक्ताऽस्य या सा तु भक्तियुक्तिरतस्त्वियम्— ॥

**नहीच्छानोदनस्यायं प्रेरकत्वेन वर्तते ।**
**अपित्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत् ॥ ८ ॥**

इति । अयं पुरुषो जीवात्मा नेच्छानोदनस्य नेच्छाप्रेरणस्य करणचक्रचोदकस्येव केवलं प्रेरकभावेन वर्तते । हिशब्द एवशब्दार्थेऽत्र केवल-शब्दार्थे वा । अपि त्विति निपातः प्रतिषेध्यनिवृत्तौ स्वरूपद्योतकः । आत्म-

१. B. substitutes °ब° for °म°. २. A. does not insert °चक्र°.

नो बलमात्मबलं निरावरणचिद्रूपं ज्ञत्व-कर्तृत्वलक्षणम् । तत्स्पर्शात्तदवष्टम्भात् तत्समो भवेत् । सर्वज्ञः सर्वकर्ता स्यादित्यर्थः ॥ ८ ॥

अनेन सर्वं स्वातन्त्र्यमुक्तमस्य च तद्भवेत् ।
अभिमानात्मकक्षोभक्षयेन त्वन्यमाह च—॥

**निजाशुद्धासमर्थस्य कर्तव्येष्वभिलाषिणः ।**
**यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ॥ ९ ॥**

इति । निजा सहजा । अनादिर्याऽशुद्धिरविद्याऽविवेकमूला भोगाभिलाषमलरूपतयाऽसमर्थस्य सङ्कुचितशक्तेः । अत एव च कर्तव्येषु कार्येष्वभिलाषिणः साभिलाषस्य सतो न कार्यमिच्छतोऽपि भवति । तथा च श्रीसात्वता—

'अज्ञता व्यापकत्वं च सुख-दुःखादिवेदनम् ।
सर्वज्ञस्यात्मतत्वस्य कर्मचक्रावलम्बनात् ॥
गतीस्त्वेषा प्रकृत्याख्या शुद्धिः प्राक्कर्मवासना ।
माया ऽविद्या भ्रमो मोहो ज्ञानं मलमिति क्वचित्' ॥

इति । गीतं च—

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्' ॥

इति । (भ० गी० १३.१९)

'अनादित्वे समानेस्याविशेषोऽयं विचारतः' ।

इति । लयो यन्मायारूपत्वात् । तदुक्तं संवित्प्रकाशे—

'मायात्वमेतदेव स्यान्नाशस्तत्वप्रदर्शनात् ।
नहि विज्ञातरज्ज्वात्मा सर्पादीन्मन्यते पुनः' ॥

इति । अन्यच्च च

'त्वत्तो द्वितीयमिह वस्तु यदस्ति किंचित्तद्विचारपदवीमवतारितं चेत् ।
गन्धर्वपत्तनमिवोपलयं प्रयाति त्वं शिष्यसे ध्रुवमतस्तव शेषसंज्ञा' ॥

इति । विद्याधिपतेश्च—

'भक्तिप्रकृतिना समाधिना युक्तितो विषयधाम्नि भ[1]क्षिते ।
सर्वभक्तपदवीमुपेयुषश्चिष्यते परमभक्षितो भवान् ॥
सा चेन्द्रजालिनो मायेवाऽऽस्थिता बाधकात्मनि ।
यथाऽग्नेर्धूमलेखेव मलवद्दर्पणस्य वा ॥
बुद्बुदाः सलिलस्येव तच्छान्तौ निर्विकारिता' ।

इति । यदा तु चोभौ विकारोऽशुद्धिजनितो देहाह[2]म्प्रत्ययरूपो विवेकेनात्मबलस्पर्शात् प्रलीयते प्रलयं याति तदा स्यात् परमं पदं स्वस्वरूपे स्थितिर्भवेदित्यर्थः । उक्तं षड्धातुसमीक्षायाम्—

'कर्माणि मोहमूलानि संसृतेः कारणं यतः ।
तत्क्षयात् कर्मनिर्मुक्तः स्वस्थः शान्ततमस्ततः' ॥

इति । नारदसङ्ग्रहेऽपि—

'यथा सुभर्जितं बीजं नेह भूयः प्ररोहति ।
विकल्पक्षीणचित्तस्य तथा भूयो न संसृतिः' ॥

इति । स च क्षोभक्षयः शनैः शनैरभ्यासाद्भवेत् । उक्तं स्वात्मसम्बोधे—

'यथाऽग्निपोत्रं ज्वलनोद्धृतं सच्छैत्यं प्रयायाच्छनकैर्न सद्यः ।
अज्ञानपङ्केऽपि तथा निरस्ते कालेन कैवल्यमुपैति देही' ॥

इति । षाड्गुण्यविवेकेऽप्यात्म-परमात्मनोरेतावान् भेदोऽभिहितः—

'अविद्याकृतसङ्कोचगृहीताहंयु[3]तस्य या ।
तया ऽभिन्नोऽपि भिन्नोऽयं तत्वतः स्वप्नभीतवत् ॥
अभीत एव यः स्वप्ने बिभ्यदभ्येति सम्भ्रमम् ।
तस्य स्वप्नादभिन्नस्य को भेदः पारमार्थिकः ? ॥
तथा हि मिथ्यैव भयं ममेति यदि बुद्ध्यते ।
स्वप्नतत्वं परामृश्य भीतिभिन्नैर्न बाध्यते ॥
एवं त्वन्मय एवाऽहमिति भावनया त्वयि ।
प्रलीनाऽहङ्कृतिग्रन्थिः पश्यत्येवं[4] त्वदात्मताम्' ॥

इति । संवित्प्रकाशे च—

---

१. B. reads भक्ते. २. A. reads देहोहं° for देहाहं°. ३. B. reads °हयुता°.
४. B. reads °त्वे°.

'कर्मेदं त्वत्कृतमपि त्वन्मयं येन माधव ।
विहीनाऽहङ्कृति ततस्त्वमेव परिशिष्यसे ॥
एतावतैव भेदोऽस्य यदहम्मानिताऽऽत्मनि ।
सा चेद्विलीना त्वद्भ्यक्त्या नष्टो भेदः स्थितैकता' ॥

इति ॥ ९ ॥

स्वरूपस्थस्य गुणानाह—

**तदाऽस्याऽकृत्रिमो धर्मो ज्ञत्व-कर्तृत्वलक्षणः ।**
**यतस्तदीप्सितं सर्वं जानाति च करोति च ॥ १० ॥**

इति । तदा तस्मिन् प्रलीनक्षोभात्मके काले ऽस्य आत्मनः स्वरूपस्थत्वात् अकृत्रिमः सहजो धर्मः स्वभावो भवतीति वाक्यशेषः । किंभूतः? जानातीति ज्ञः । तस्य भावो ज्ञत्वम् । करोतीति कर्ता । कर्तुर्भावः कर्तृत्वम् । आभ्यां यो लक्ष्यते, एते वा लक्षणं रूपचिह्नं यस्य धर्मस्य स ज्ञत्व-कर्तृत्वलक्षणः । यतो यस्माद्धर्माद्धेतोर्वा यज्ज्ञातुमीप्सितमभिमतं तज्ज्ञानाय यत्[1] कर्तुमिष्टं तत् करोति स्वात्मनो वा परस्य वा । पञ्चरात्रे चैष एव धर्मो विवेकजज्ञानशब्देनोक्तः—

'तस्य च प्रादुर्भवतः किं पूर्वरूपं? यत् सर्वज्ञो भवति
सर्वदर्शी सर्वेश्वरः सर्वशक्तिः' ।

इति । स चाऽस्य करणैर्विनाऽपि स्यात् । तत्रैवोक्तं हि—

'तद्यथा अग्निर्नाम कांश्चिद्ग्राह्ये नान्यत्किंचि-
दुपादत्ते तेन धक्ष्यामीति स्वयमेव दहति ।
एवमयमात्माऽनुपादाय ज्ञाताऽनुपादायकारी स्वात्मनैव सर्वकरः' ।

इति । कुतः? बोधरूपत्वात् । षाड्गुण्यविवेके उक्तम्—

'न हि बोधो विचित्रार्थनिर्माणेऽन्यमपेक्षते ।
सङ्कल्पादेव यो रूपसहस्राणि सृजत्यजः' ॥

इति । येत्वस्य ज्ञत्व-कर्तृत्वादीन्यन्यतो वदन्ति तेषामनीशतैव स्यात् । उक्तं हि आगमरहस्ये—

१. A. omits यत्.

'येऽपीश्वरं व्यपदिशन्ति निमित्तहेतुं तैरर्पितः स्थलजलाञ्जलिरीशितायै ।
अन्याङ्गनोपगमनेन वशीकृतस्य कामीश्वरस्थितिममी बत सङ्गिरन्ते'? ॥

इति । तस्माद्युक्तमुक्तम् ॥ १० ॥

अस्याऽकृत्रिमधर्मस्य स्थैर्यायोपाय उच्यते ।—

**तमधिष्ठातृभावेन स्वभावमवलोकयन् ।**
**स्मयमान इवास्ते यस्तस्येयं कुसृतिः कुतः ? ॥ ११ ॥**

इति । तं शुद्धमात्मस्वभावमधिष्ठातृभावेन चिद्रूपतया सर्वव्यापकत्वेनावलोकयन्पश्यन्प्रतिजानन् स्मयमान इव विस्मयाविष्ट इव विकसन्निव यस्तिष्ठति तस्य अविद्याविलयादियं कुतः कुसृतिः ? कुत्सितसंसरणं न कुतश्चिद्भवतीति वाक्यशेषः । उक्तं च शिवसूत्रेषु—

'विस्मयो योगभूमिका' ।

इति । अस्य चैतदवलोकनं यद् द्रष्टृरूपतयाऽनुभवनम् । उक्तं श्रीगुरूपदेशे—

'यदिदं दृश्यते दृष्ट्या ग्रहं पुत्राऽच सन्त्यज ।
येन पश्यसि तं पश्य यं दृष्ट्वा पश्यसेऽखिलम्' ॥

इति । कर्त्रा चोक्तम्—

'यो जगुपश्चि एषु किंनु वीत्तोमा इत्थ करोविषयाल विलुट्टि ।
एसे पत्तापत्त रावोत्तो आपलइयद अस्त्युबुद्धि' ॥

इति । तथाऽस्याऽन्यतः कुतः साभिलापतया विकल्पशिल्पादिक्रमामार्गानुसरणम् ? अपि त्वेवं सदैव स्वस्वरूपे स्थितिर्भवेत् । तत्स्थत्वाच्चेश्वरवत्सत्यसङ्कल्पः स्यादित्यतोऽस्मिन्नेवासक्ती । यतोऽभ्यासं विना ज्ञातमपि[1] स्वीकर्तुं न शक्यते । तदन्तरेण च कुतः सिद्धिः ? । उक्तं मुनिना—

'यदि वाचनिकाद्दज्ञानान्मुक्तिः स्याद्भावनां विना ।
शारीर-मानसैर्दुःखैर्मुच्येरन् सर्वजन्तवः' ॥

इति । तथा तु युक्तौ—

'रसायनं विना स्वादात् सूचितं ह्यपि सिद्धिदम्' ।

इति । अन्यच्चोक्तम्—

---

१. A. reads ज्ञान°.

'आगोप-बाल-वनितं भगवंस्त्वमित्थं ज्ञातोऽप्युपायविरहान्न तु मोक्षदोऽसि ।
नान्तः स्थितं भवति धेनुषु तृं[1]ड्विहर्तृं क्षीरं तदेव पुनरभ्यवहारतः स्यात्'॥

इति ॥ ११ ॥

तान्ध्वं[2]सयितुमाहेदं ये त्वाहुः शून्यवादिनः ।
अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत्– ॥

**नाऽभावो भाव्यतामेति न च तत्रास्त्यमूढता ।**
**यतोऽभियोगसंस्पर्शात्तदासीदिति निश्चयः ॥ १२ ॥**
**अतस्तत्कृत्रिमं ज्ञेयं सौषुप्तपदवत् सदा ।**
**नत्वेवं स्मर्यमाणत्वं तत्तत्वं प्रतिपद्यते ॥ १३ ॥**

(युगलकम् ।)

इति । नाऽभावः शशविषाणसदृशो भाव्यतामनुभवविषयत्त्वमेति प्राप्नोति । अवस्तुत्वात् । न च तत्राऽभावे अमूढतास्ति अपि तु मूढावस्थैव सा । यतोऽभियोगसंस्पर्शादभिलाषसंयोगात्तदभावभावनमासीदभूत् । अतीतमिति निश्चयः । यस्मात् सा मम शून्यावस्थातीतेति स्मर्यते । तदुक्तम्–

'अभावो येन भावेन बाध्यतेऽस्ति न नास्ति सः ।
तस्य भावस्य सद्भावो वद केन निवार्यते ? ॥
सोऽस्त्यतश्चिन्मयो भावो येन सर्वं विभाव्यते'।

इति । अतो हेतोस्तदभावभावनं कृत्रिममनित्यं सदा ज्ञेयम् । किमिव ? सौषुप्तपदवत् सुषुप्तावस्थेव । नत्वेवं मूढावस्थावत् । तदा आत्मतत्वं स्मर्यमाणत्वं स्मर्तव्यतां प्रतिपद्यते गच्छति । स्मर्तृत्वाच्चिद्रूपस्य । नित्योदितत्वाच्च । तस्मात्तत्वं गुरूपदेशेनादरात् परीक्ष्यमिति ॥ १२–१३ ॥

एवम्–

अवस्थाद्वयमे[3]वाऽस्ति स्मर्तृ-स्मर्तव्यभेदतः ।
यतस्य नित्यानित्यत्वविचारायेदमुच्यते– ॥

**अवस्थायुगु[4]लं चाऽत्र कार्य-कर्तृत्वशब्दितम् ।**
**कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥ १४ ॥**

---

१. Both manuscripts read पितृहर्तृं. २. B. reads धूसयितुम्. ३. A. reads °मेवा°.
४. B. reads युगलं.

इति । अत्रास्मिन्पूर्वोक्ते स्पन्दतत्वे ऽवस्थायुगुलं दशाद्वयं यदस्ति कार्य-कर्तृत्वशब्दितं कार्य-कारणसंज्ञितं भोग्य-भोक्तृभेदभिन्नदृश्यदृष्टृभिदावेद्य-वेदकरूपम् । तत्र तयोरध्यासाद्या कार्यता सा क्षयिणी उत्पत्तिविनाशयुक्ता । यत्पुनः कर्तृत्वं तदक्षयम् । निरवधि[1]चित्स्वरूपत्वात् ॥ १४ ॥

अत एव—

**कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।**

**तस्मिँल्लुप्ते विलुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥ १५ ॥**

इति । अत्रास्मिन्कार्ये बाह्येर्थे क्षयिणि सति कार्योन्मुखः कार्यसम्पादनाभिमुखो यः प्रयत्नो बाह्यकरणव्यापाररूपः स केवलं लुप्यते न लक्ष्यते न्यग्भूयेव स्वात्मन्यास्ते । स्थगितेन्द्रियस्य वा व्यापारासामर्थ्यात् । तस्मिन् प्रयत्ने लुप्ते सति—अस्मि अहं विलुप्तो नष्ट इत्यबुधोऽज्ञः प्रतिपद्यते जानाति । न तु चिद्रूपस्य विनाशोऽस्ति । उक्तं च—

‘ विद्दप्तेर्न विनाशोऽस्ति विनष्टेऽपि शरीरके ।

अभावे सूर्यकान्तस्य नैवास्ति सवितुः क्षतिः ’ ॥

इति ॥ १५ ॥

कस्माच्चेत्याह—

**न तु योन्तर्मुखो भावः सार्वज्ञादिगुणास्पदम् ।**

**तस्य लोपः कदाचित् स्यादन्यस्यानुपलम्भनात् ॥ १६ ॥**

इति । देश-कालादिविच्छिन्नस्य कार्यस्यैव लोपो निवृत्तिर्न तु योन्तर्मुखो भावो बहिरप्रसृतेः स्वस्वरूपस्थः स्वस्वभावः सर्वज्ञतादीनां गुणानामास्पदमाश्रयस्तस्य भावस्य लोपः कदाचित्स्याद्भवेत् उपपद्यते । कुतो न स्यात् ? चिद्रूपं मुक्त्वा ऽन्यस्य द्वितीयस्याऽनुपलम्भनादनुपलब्धेः । तस्यैव[2] हि सर्वत्र सर्वदोपलब्धिः । एतदुक्तम्—

‘ देश-काल-क्रियाकारैरवच्छिन्नेषु वस्तुषु ।

अनवच्छिन्नरूपस्त्वं भासि तस्य बहिःस्थितेः ’ ॥

इति । अत्र च—

---

1. A. reads निर्वाधचित्°. 2. Both manuscripts read स एव, but it seems incorrect.

'भेदः सर्वज्ञतादीनां ज्ञानादीनां च नास्त्यमी ।
ज्ञानस्यैव धर्मतया चिद्रूपस्य स्थितिर्यतः' ॥

इति । उक्तं च षाड्गुण्यविवेके—

'गुणेषु ज्ञानमाद्यन्ते तेन तत्त्वेऽवधारिते ।
धर्मत्वेनेषिता शक्तिर्बल-वीर्यौजसां स्थितेः' ॥

इति । कक्ष्यास्तोत्रे च—

'ज्ञानं प्रशान्तं तव बोधवृत्तिरैश्वर्यमुद्यत्प्रसरा परेषाम् ।
प्रकाशनं प्रत्यपि योग्यरूपा शक्तिर्बहिःस्थैर्यवती बलं सा ॥
उत्पन्नबाह्यप्रसरं तु वीर्यं तेजश्च बाह्यानवभासयन्ति ।
षोढेत्थमेकैव तव स्वशक्तिर्बाह्यावमर्शात् भवेदविद्या ॥
तत्र सर्वज्ञता ज्ञानं सर्वं हि जायते ततः' ।

इति । तृप्तिर्बलम् । तथाहि—

'बलस्य तृप्तिमूलत्वात्त्वमस्य तदभावतः ।
अनादिबोधस्तेजोऽच बोधमूलं हि तत्सदा' ॥

इति । तदुक्तम्—

'प्रभावलक्षणं यच्च तेजः प्रव्हयते परान् ।
बोधत्वादेव तद्वेद्यं बोधं प्रव्हयते जगत् ॥
स्वतन्त्रताऽच चैश्वर्यं स्वातन्त्र्यादीश्वरस्य तु' ।

इति । तदुक्तम्—

'स्वतन्त्रः सर्वकृत्येषु न नियोज्यो न विघ्नवान् ।
प्रवृत्तोऽस्यप्रवृत्तो वा यतस्तेन त्वमीश्वरः ॥
वीर्यं सदा लुप्तशक्तिर्नाशाभावश्च तद्गतः' ।

इति । तदुक्तम्—

'आत्मसत्वापरिभ्रंशलक्षणाद्वीर्यमासत ।
वीर्यादेतच्च ते कार्येऽनन्वयः स्वर्णवच्च यः ।
अनन्तशक्तिः शक्तिः सा सामर्थ्यात्सर्वतः सदा' ॥

इति ॥ १६ ॥

तस्य तु क्व कस्योपलब्धिरित्याह—

**तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी ।**
**नित्यं स्यात्सुप्रबुद्धस्य तदाद्यन्ते परस्य तु ॥ १७ ॥**

इति । तस्य चिद्रूपस्यात्मनो योगिनः सततमुपलब्धिरनुभवो भवेत् । कीदृशस्य योगिनः ? नित्यं सदैव सुप्रबुद्धस्य । कीदृश्युपलब्धिः ? । त्रिपदाव्यभिचारिणी । त्रिष्वपि जाग्रदादिषु पदेष्ववस्थासु न या व्यभिचरति न निवर्तते सा तथोक्ता । कार्ये तु निर्भ्रान्तैव । उक्तं च—

'काप्यवस्था न ते साऽस्ति यस्यां संविन्न वर्तते ।
तेन चिद्घनमेव त्वां योगिनः पर्युपासते' ॥

इति । अपरस्य पुनरीषत्प्रबुद्धस्य प्रबुद्धस्य च । तदाद्यन्ते तदिति पदत्रयस्य परामर्शः । एतदुक्तम्—

'तदादौ प्रागवस्थायां (तदन्ते ऽपि) च तन्मये ।
पदं प्रत्ययवाद्यन्ते जाग्रतुर्येऽप्वैवाऽऽगमात्' ॥

इति । अथवा तदादौ तदन्ते च तन्मध्ये जाग्रत्स्वप्नयोरित्यर्थः । यतः प्रबुद्धस्यैतयोरेव स्फुटोपलब्धिः संवेदनम् ॥ १७ ॥

स च तस्य क्व कथमिति स्फुटीकर्तुमाह—

**ज्ञान-ज्ञेयस्वरूपिण्या शक्त्या परमया युतः ।**
**पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः ॥ १८ ॥**

इति । विभुर्व्यापकः चिन्मयश्चिद्रूपः परमात्मा परमया शक्त्याऽत्युत्कृष्टेन सामर्थ्येन युक्तः । पदद्वये जाग्रत्स्वप्नात्मके भाति दीप्यते प्रकाशते । कीदृश्या शक्त्या ? ज्ञान-ज्ञेयभेदेन द्विरूपया । द्वैरूप्यात्त्वस्याः पारम्यम् । अत एवाऽस्मिन्नवस्थाद्वये द्विविधोपलब्धिः । तदन्यत्र पुनस्तस्मात्पदद्वयादन्यस्मिन्पदद्वये सुषुप्ततुर्याख्ये चिन्मयश्चिन्मात्र एव । ज्ञेयाभावाद्‌ ज्ञानस्वरूप एवेत्यर्थः ॥ १८ ॥

तस्योपलब्धिर्योक्ता सा गुणस्पन्दादिभिः स्थितेः ।
कुतस्त्या ? चेति सा शङ्का ये तान्प्रत्युच्यते त्विदम्— ॥

---

१. B. reads कीदृशो for कीदृशस्य. २. B. has the letter प्व quite illegible, it may be प, प्य or प्व.

